# अथ सप्तमः पटलः

श्रीदेव्याः पूर्णाभिषेकजिज्ञासा

**श्रीदेव्युवाच**

**महादेव ! जगद्बन्धो ! करुणासागर ! प्रभो ! ।**
**पूर्णाभिषेकं कौलानां वद मे सुखमोक्षदम् ॥1॥**

देवी पार्वती ने शिव से कहा—हे महादेव ! हे जगद्बन्धो ! हे करुणासागर ! हे प्रभो ! अब आप कौल साधकों को भोग और मोक्ष प्रदान करनेवाले पूर्णाभिषेक का निरूपण कीजिये ।

श्रीशिवेन पूर्णाभिषेकविधिवर्णनोपक्रमः

**श्रीशिव उवाच**

**शृणु देवि ! मम प्राणवल्लभे ! परमाद्भुतम् ।**
**पूर्णाभिषेकं सर्वाशापूरकं शिवताप्रदम् ॥2॥**

श्रीशिव बाले—हे प्राणप्रिये ! देवि ! साधकों की समस्त अभिलाषाओं को पूर्ण करने वाले कल्याणप्रद परम अद्भुत पूर्णाभिषेक के बारे में सुनो ।

पूर्णाभिषेकाय गुरोः कर्तव्यता

**आगत्य सद्गुरुः सिद्धो मन्त्रतन्त्रविशारदः ।**
**कौलः सर्वजनख्यातश्चाभिषेकविधिं चरेत् ॥3॥**
**अतिगुप्तालये शुद्धे रम्ये कौलिकसम्मते ।**

हे देवि ! साधक का पूर्णाभिषेक सम्पादित करने के लिये मन्त्र-तन्त्रों के रहस्यों के ज्ञाता और इस विषय में सभी लोगों में प्रसिद्ध कौल गुरु को चाहिये कि वह कुलसाधकों द्वारा स्वीकृत मानकों के अनुसार स्वच्छ, पवित्र, रमणीय और गुप्त स्थान पर आकर पूर्णाभिषेक-विधि सम्पादित करे ।

पूर्णाभिषेकाय साधकस्य कर्तव्यता

**वेश्याङ्गनाः समानीय तत्त्वानि च सुयत्नतः ॥4॥**
**विशिष्टकौलिकान् भक्त्या तत्रैव सन्निवेशयेत् ।**

हे देवि ! पूर्णाभिषेकार्थी साधक को चाहिये कि वह अभिषेक-विधि आरम्भ होने से

पूर्व ही अभिषेक-स्थल पर इस विधि में प्रयुक्त की जाने वाली तत्त्वाचारपूजा के लिये प्रयत्नपूर्वक वेश्याओं, मद्य, मास, मत्स्य तथा मुद्रा की व्यवस्था कर विशिष्ट कौलजनों को आहूत कर उन्हें सम्मानपूर्वक वहाँ बैठाये ।

**अर्चयेदभिषेकार्थं गुरुं वस्त्रादिभूषणैः ॥5॥**
**प्रणमेद् विधिवद् भक्त्या तोषयेत्स्तुतिवाक्यतः ।**
**प्रार्थयेच्छुद्धभावेन कुलधर्मं वदेति च ॥6॥**

साधक को चाहिये कि वह अपने अभिषेक के लिये गुरु को भक्तिपूर्वक प्रणाम करके उन्हें वस्त्राभूषणादि तथा स्तुतिवाक्यों से सन्तुष्ट कर शुद्धभाव से प्रार्थना करे कि—'हे गुरो ! आप मुझे कुलधर्म का उपदेश करें' ।

**कृतार्थं कुरु मां नाथ ! श्रीगुरो ! करुणानिधे ! ।**
**अभिषिञ्च साधकं च सेवार्थं शरणं गतम् ॥7॥**

हे करुणानिधे ! गुरुदेव ! मैं आपकी शरण में आया हूँ । कृपया आप अभिषिक्त कर अनुग्रहीत करें ।

अभिषेके गुरोः कर्तव्यानि

**ततोऽभिषेक्ता तत्त्वानि शोधयेच्छुद्धिमान् मुदा ।**
**स्थापयित्वा पुरः कुम्भं मन्त्रमुद्रादिभिः प्रिये ॥8॥**
**वितानैर्धूपदीपानां कृत्वा चामोदितं स्थलम् ।**
**नाना पुष्पैस्तथा गन्धैः सर्वोपकरणैर्यजेत् ॥9॥**

साधक द्वारा अभिषेक के लिये प्रार्थना किये जाने पर अभिषेक-विधि सम्पन्न करने वाले शक्तिसम्पन्न कौलगुरु को चाहिये कि वह प्रसन्नतापूर्वक मण्डप निर्मित कर, उस स्थल को धूपादि से सुगन्धित तथा दीपों से प्रकाशित कर, विहित मन्त्रों से कुम्भ स्थापित कर पंचतत्त्वों का शोधन करे । तत्पश्चात् विविध प्रकार के पुष्पों, सुगन्धपदार्थों तथा पूजा के अन्य साधनों से भगवती की अर्चना करे ।

**समाप्य महतीं पूजां तत्त्वानि सन्निवेद्य च ।**
**आदौ स्त्रीभिः समर्प्यैव प्रसादाल्पं भजेत् ततः ॥10॥**

इस प्रकार समारम्भपूर्वक महापूजा समाप्त कर भगवती को समर्पित प्रसाद पहले अभिषेकक्रिया में उपस्थित स्त्रियों को देकर तत्पश्चात् स्वयं भी थोड़ा प्रसाद ग्रहण करे ।

चक्रालये मद्यादिसेवनम्

**शुभचक्रं विनिर्माय आगमोक्तविधानतः ।**
**अभिषिक्त्वा साधकांश्च पाययेत्तु स्वयं पिबेत् ॥11॥**

तत्पश्चात् देशिक को चाहिये कि वह आगमोक्त विधि से पवित्र कौलचक्र की रचना करके वहाँ उपस्थित साधकों का सुरा से अभिषिक्त कर, उन्हें सुरापान कराये तथा स्वयं भी करे ।

**भुञ्जीरन् मत्स्यमांसाद्यैश्चर्व्यचोष्यादिभिश्च ते ।**
**रमेरन् परमानन्दैर्वेश्यायां च यथासुखम् ॥12॥**

सुरापान के अनन्तर गुरु को चाहिये कि वह वहाँ उपस्थित साधकोंसहित मत्स्य, मांसादि तथा अन्य चर्व्य, चोष्य, भक्ष्य तथा लेह्य व्यंजनादिकों का उपभोग करें और आनन्दपूर्वक चक्रालय में उपस्थित वेश्याओं के साथ रमण करे ।

**वदेयुः कर्मकर्तुश्च सिद्धिर्भवतु निश्चला ।**
**अभिषेचनकर्मास्तु निर्विघ्नं चेति निश्चितम् ॥13॥**

हे देवि ! मद्यमांसादि पंचतत्त्वों का यथेच्छ उपभोग कर रहे गुरु और अन्य साधक अभिषेकार्थी साधक को आशीर्वाद दें कि उसे साधना में स्थिर सिद्धि मिले और अभिषेक कर्म निर्विघ्न समाप्त हो ।

### चक्रालयान्निःसरणनिषेधः

**चक्रालयान्निःसरेन्न जन एकोऽपि शङ्करि ! ।**
**प्रातःकृत्यादिकर्माणि कुर्यात् तत्रैव साधकः ॥14॥**

हे शाम्भवि ! यह ध्यान रखना चाहिये कि चक्रपूजन की समाप्तिपर्यन्त चक्रगृह से बाहर कोई भी न जाय । साधक भी शौच-दन्तधावनादि समस्त कृत्य चक्रालय के भीतर ही सम्पन्न करे ।

**दिनानि त्रीणि संव्याप्य भक्त्या तांस्तु समर्चयेत् ।**
**शिष्यश्चादौ दिवारात्रमभिषिक्तो भवेत् ततः ॥15॥**

अभिषेकार्थी साधक को चाहिये कि वह अभिषेकोत्सव में भाग ले रहे साधकों और अपने गुरु की तीन दिनों तक रात-दिन मद्यमांसादि से सम्मानित कर अभिषिक्त होने की पात्रता प्राप्त करे और तदनन्तर ही अभिषिक्त हो ।

### अभिषेकार्थं वस्तूनां प्राक्व्यवस्था

**अनुष्ठानविधिं वक्ष्ये सादरं शृणु पार्वति ! ।**
**न प्रकाण्डं न हि क्षुद्रं प्रमाणं घटमाहरेत् ॥16॥**
**ताम्रेण निर्मितं वापि स्वर्णेन निर्मितं च वा ।**
**प्रवालं हीरकं मुक्ता स्वर्णरौप्ये तथैव च ॥17॥**
**नानालङ्कारवस्त्राणि नानाद्रव्याणि भूरिशः ।**
**कस्तूरीकुङ्कुमादीनि नानागन्धानि चाहरेत् ॥18॥**

हे पार्वति ! अब मैं अभिषेक-कर्म में सम्पन्न की जानेवाली विधियों का निरूपण करता हूँ, इन्हें आदर और ध्यान से सुनो । सबसे पहले न तो बहुत बड़े और न ही बहुत छोटे आकार वाले ताम्र अथवा स्वर्णनिर्मित कलश की व्यवस्था कर लेनी चाहिये । स्वर्ण या ताम्र कलश के अतिरिक्त कलशपूजन में प्रयुक्त होने वाले मूँगा, हीरा, मोती, स्वर्ण तथा रजत् नामक पंचरत्नों* की व्यवस्था भी चक्रालय में पहले से ही कर लेनी चाहिये । इनके अलावा आचार्य, साधक तथा साधिकाओं को दक्षिणादि प्रदान करने के लिये स्वर्ण, रजत, विभिन्न प्रकार के वस्त्रों तथा आभूषणों आदि की व्यवस्था भी चक्रालय में पहले से कर लेनी चाहिये । हे परेशि ! इनके अलावा कस्तूरी, कुंकुम, चन्दनादि विभिन्न सुगन्धिप्रद वस्तुओं की व्यवस्था भी कर लेनी चाहिये ।

**नाना पुष्पाणि माल्यानि पञ्चतत्त्वानि यत्नतः ।**
**विहितान् धूपदीपांश्च घृतेन परमेश्वरि ! ॥19॥**

उक्त वस्तुओं के अलावा भी विभिन्न प्रकार के पुष्प, माला, मद्यादि पंचतत्त्व, घृत सहित धूपदीपादि की व्यवस्था भी अभिषेक-कर्म आरम्भ करने से पूर्व ही कर लेनी चाहिये । क्योंकि, पूजन के दौरान इन वस्तुओं को लाने के लिये चक्रालय से बाहर कोई व्यक्ति जा नहीं सकता ।

**ततः शिष्यं समानीय गुरुः शुद्धालये प्रिये ! ।**
**वेश्याभिः साधकैः सार्द्धं पूजनं च समाचरेत् ॥20॥**
**पटलोक्तविधानेन भक्तितः परिपूजयेत् ।**
**पूजां समाप्य देव्यास्तु स्तवैस्तु प्रणमेन्मुदा ॥21॥**

हे देवि ! अभिषेकोपयोगी उक्त सभी वस्तुओं की चक्रालय में उपलब्धता निश्चित कर लेने के पश्चात् गुरु को चाहिये कि वह अभिषेकार्थी साधक को चक्रालय में अभिषेक के लिये निर्धारित पवित्रस्थल पर आहूत करके वेश्याओं और साधकों के साथ भक्तिपूर्वक पटलोक्त विधि से भगवती की अर्चना करे और विधिपूर्वक देवी की पूजा सम्पन्न करके स्तुतिवाक्यों से उन्हें प्रसन्न कर प्रणाम करे ।

**ततो हि शिवशक्तिभ्यो गन्धमाल्यानि दापयेत् ।**
**आसनं वस्त्रभूषां च प्रत्येकेन कुलेश्वरि ! ॥22॥**

हे कुलस्वामिनि ! भगवती की अर्चना समाप्त कर लेने के बाद साधक को चाहिये कि वह अभिषेक-कर्म में भाग ले रहे शिव-शक्तिरूप प्रत्येक साधक और साधिका को सुगन्धित द्रव्य, माला, आसन, वस्त्र तथा आभूषणादि प्रदान करे ।

---

* प्रवालं हीरकं मुक्ता स्वर्णरौप्ये तथैव च । (7:17)

### घटस्थापनम्

**ततः शङ्खादिवाद्यैश्च मङ्गलाचरणैः परैः ।**
**घटस्थापनकं कुर्यात् क्रमं तत्र शृणु प्रिये ! ॥23॥**

हे प्रिये ! तत्पश्चात् भव्य मंगलमय गीतों और शंखादि की ध्वनियों से गुंजरित मण्डप में कलश की स्थापना करनी चाहिये । मैं अब कलश-स्थापन के क्रम का उल्लेख कर रहा हूँ, ध्यान से सुनो ।

**कामबीजेन सम्प्रोक्ष्य वाग्भवेनैव शोधयेत् ।**
**शक्त्या कलशमारोप्य मायया पूरयेज्जलैः ॥24॥**

हे देवि ! अभिषेक्ता गुरु कलश को कामबीज 'क्लीँ' से प्रोक्षित, वाग्भवबीज 'ऐं' से शोधित और शक्तिबीज 'सौः' से (27 कुशों से निर्मित आधार कूर्च पर*) स्थापित कर मायाबीज 'ह्री' से उसमें जल भरे ।

**प्रवालादीन् पञ्चरत्नान् विन्यसेत् तत्र यत्नतः ।**
**आवाहयेच्च तीर्थानि मन्त्रेणानेन देशिकः ॥25॥**

हे देवि ! कलश में जलपूरण के बाद उसमें पूर्वोक्त मूँगा, हीरक, मुक्ता, स्वर्ण तथा रजत् नामक पंचरत्न डालकर अभिषेक्ता गुरु और सभी साधक-साधिकाओं द्वारा निम्न मन्त्रों से गंगादि तीर्थों का उस कलश में आवाहन करना चाहिये ।

### कलशे तीर्थादीनामावाहनम्

**ओं गङ्गाद्याः सरितः सर्वाः समुदाश्च सरांसि च ।**
**सर्वे सागराः सरितः सरांसि जलदा नदाः ॥26॥**
**ह्रदाः प्रस्त्रवणाः पुण्याः स्वर्गपातालभूगताः ।**
**सर्वतीर्थानि पुण्यानि घटे कुर्वन्तु सन्निधिम् ॥27॥**

देवनदी गंगा, यमुना तथा सरस्वती संज्ञक पवित्र नदियों, सभी समुद्रों, पुष्करादि सरोवरों, समस्त महासागरों, नर्मदादि अन्य सरिताओं, नयनादि तालों, जलराशि से परिपूर्ण ब्रह्मपुत्र तथा शोणादि नदों, स्वर्ग, पाताल और धरती पर विद्यमान समस्त बृहदाकार गभीर ह्रदों और सभी पवित्र तीर्थों का इस पवित्र कलश में उपस्थित होने के लिये हम आह्वान करते हैं ।

### कलशसंस्कारः

**रमाबीजेन जप्तेन पल्लवं प्रतिपादयेत् ।**
**कूर्चेन फलदानं स्याद् गन्धवस्त्रहृदात्मना॥28॥**

---

* सप्तविंशतिदर्भैश्च कूर्चं तस्योपरिक्षिपेत् ।　　(परमानन्दतन्त्रे, 12:25)

कलश में गंगादि सभी तीर्थों का आह्वान करने के पश्चात् रमाबीज 'श्रीं' से कलश के मुख पर (आम्रादि अथवा कुलवृक्षों* के) पल्लव रखने चाहिये। कूर्चबीज 'हूं' से फल तथा हृद्बीज 'नमः' से कलश पर गन्ध पदार्थ तथा वस्त्र रखने चाहिये।

**ललनयैव सिन्दूर पुष्पं दद्यात् तु कामतः।**
**मूलेन दूर्वां प्रणवैः कुर्यादभ्युक्षणं* ततः ॥29॥**

हे देवि ! ललनाबीज 'स्त्रीं' से कलश पर सिन्दूर लगाना चाहिये, कामबीज 'क्लीं' से पुष्प, देवी के मूलमन्त्र से दूर्वा चढ़ाकर प्रणव अर्थात् ओंकार से कलश कर अभ्युक्षण करना चाहिये।

**हुं फट् स्वाहेति मन्त्रेण कुर्याद् दर्भैस्तु ताडनम्।**
**विचिन्त्य मूलपीठं तु तत्र संयोज्य पूजयेत् ॥30॥**

हे देवि ! अभ्युक्षण के पश्चात् कुशों द्वारा 'हुं फट् स्वाहा' मन्त्र से ताडन करके घट में देवी के मूलपीठ की भावना करके पीठपूजा सम्पन्न करनी चाहिये।

ब्रह्मकलशप्रार्थनम्

**स्वतन्त्रोक्तविधानेन प्रार्थयेदमुना बुधैः।**
**तद्घटे हस्तमारोप्य शिष्यं पश्यन् गुरुश्च सः ॥31॥**

हे देवि ! कलश में पीठपूजा के उपरान्त गुरु को चाहिये कि वह शिष्य की ओर देखते हुए कलश पर हाथ रखकर कौलतन्त्र में निर्दिष्ट विधानानुसार कलश से निम्नोक्त प्रार्थना करे।

**उत्तिष्ठ ब्रह्मकलश ! देवताभीष्टदायकः।**
**सर्वतीर्थाम्बुसम्पूर्ण ! पूरयास्य मनोरथम् ॥32॥**

'समस्त तीर्थों के पवित्र जल से पूर्ण और देवताओं की अभिलाषाओं को पूर्ण करने वाले हे ब्रह्मकलश ! उठो, जाग्रत् होकर अभिषेकार्थी इस साधक की अभिलाषा पूर्ण करो।'

**अभिषिंचेद् गुरुः शिष्यं ततो मन्त्रैश्च पार्वति !।**
**मङ्गलैर्निखिलैर्द्रव्यैः साधकैः शक्तिभिः सह ॥33॥**
**पल्लवैराम्रकाद्यैश्च लतां संवीक्ष्य एव च।**
**आनन्दैः परमेशानि ! भक्तानां हितकारिणि ! ॥34॥**

हे भक्तहितैषिणि देवि ! कलश-प्रार्थना के अनन्तर गुरु को चाहिये कि वह वहाँ उपस्थित समस्त साधकों और योगिनियों के साथ वक्ष्यमाण मन्त्रों का उच्चारण करते हुए मंगलमय पवित्र द्रव्यमिश्रित जल से 'लतां संवीक्ष्य एव च' साधक नम्रता से झुके शिरोधरांश शिष्य का उसकी शक्ति के साथ अभिषेक करना आरम्भ करे।

* 'नतिमच्छिश्यमेव' चेति पाठः क्वचित्।

**अभिषेकमन्त्राः**

**अस्याभिषेकमन्त्रस्य दक्षिणामूर्ति, ऋषिः, अनुष्टुप् छन्दः,**
**शक्तिर्देवता, अमुकस्य सर्वसङ्कल्पसिद्धये विनियोगः ॥**

हे देवि ! मैं अभिषेक के जिन मन्त्रों का उल्लेख कर रहा हूँ, उनके साक्षात्कारकर्ता ऋषि दक्षिणामूर्ति, छदस् अनुष्टुप् तथा देवता महामाया शक्ति हैं। इन मन्त्रों का विनियोग समस्त संकल्पों की सिद्धि के लिये किया जाता है।

**ओं राजराजेश्वरीशक्तिर्भैरवी कालभैरवी ।**
**श्मशानभैरवी देवी त्रिपुरानन्दभैरवी ॥35॥**
**त्रिकुटा त्रिपुरा देवी तथा त्रिपुरसुन्दरी ।**
**त्रिपुरेशी महादेवी तथा त्रिपुरमालिका ॥36॥**
**त्रिपुरानन्दिनी देवी तथैव त्रिपुरातनी ।**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥37॥**

हे पार्वति ! अभिषेक मन्त्रों को प्रणवोच्चारणपूर्वक इस प्रकार बोलना चाहिये—हे प्रिय शिष्य ! भगवती राजराजेश्वरी शक्ति, भैरवी, कालभैरवी, श्मशानभैरवी, त्रिपुरानन्द-भैरवीदेवी, त्रिकुटादेवी, त्रिपुरादेवी, त्रिपुरसुन्दरी, त्रिपुरेशी, महादेवी, त्रिपुरमालिका, त्रिपुरा-नन्दिनी देवी और त्रिपुरातनी नामक देवियाँ कलश के इस मन्त्रपूत जल से तुम्हारा अभिषेक करें।

**छिन्नमस्ता महादेवी तथैवैकजटेश्वरी ।**
**तारा च जयदुर्गा च शूलिनी भुवनेश्वरी ॥38॥**
**त्वारिताख्या महादेवी तथैव च त्रिखण्डिका॥**
**नित्या च नित्यरूपा च वज्रप्रस्तारिणी तथा॥39॥**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।**

महादेवी छिन्नमस्ता, एकजटेश्वरी, तारा, जयदुर्गा, शूलिनी, भुवनेश्वरी, महादेवी त्वरिता, त्रिखण्डिका, नित्या, नित्यरूपा तथा वज्रप्रस्तारिणी नामक देवियाँ कलश के इस पवित्र जल से तुम्हारा अभिषेक करें।

**अश्वारूढा महेशानी तथा महिषमर्दिनी ॥40॥**
**दुर्गा च नवदुर्गा च श्रीदुर्गा भगमालिनी ।**
**तथा भगन्दरी देवी भगक्लिन्ना तथा परा ॥41॥**
**सर्वचक्रेश्वरी देवी तथा नीलसरस्वती ।**
**सर्वसिद्धिकरी देवी सिद्धगन्धर्वसेविता ॥42॥**
**उग्रतारा महादेवी तथा च भद्रकालिका ।**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥43॥**

अश्वारूढा, महेशानी, महिषमर्दिनी, दुर्गा, नवदुर्गा, श्रीदुर्गा, भगमालिनी, देवी, भगन्दरी, भगक्लिन्ना, परा, देवी, सर्वचक्रेश्वरी, नीलसरस्वती, सर्वसिद्धिकरीदेवी, सिद्धगन्धर्वसेविता, उग्रतारा तथा महादेवी भद्रकालिका कलश के मन्त्रपवित्र इस जल से तुम्हें अभिषिक्त करें ।

**क्षेमङ्करी महामाया चानिरुद्धसरस्वती ।**
**मातङ्गिनी चान्नपूर्णा राजराजेश्वरी तथा ॥44॥**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।**

हे शिष्य ! क्षेमंकरी, महामाया, अनिरुद्धसरस्वती, मातंगिनी तथा राजराजेश्वरी अन्नपूर्णा कलश के मन्त्रपवित्र इस जल से तुम्हें अभिषिक्त करें ।

**उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥45॥**
**चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ।**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥46॥**

उग्रचण्डा, प्रचण्डा, चण्डोग्रा, चण्डनायिका, चण्डा, चण्डवती चण्डरूपा, अतिचण्डिका नामक देवियाँ कलश के मन्त्रपूत जल से तुम्हें अभिषिक्त करें ।

**उग्रदंष्ट्रा महादंष्ट्रा शुभदंष्ट्रा कपालिनी ।**
**भीमनेत्रा विशालाक्षी मङ्गला विजया जया ॥47॥**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।**

हे प्रिय साधक ! उग्रदंष्ट्रा, महादंष्ट्रा, शुभदंष्ट्रा, कपालिनी, भीमनेत्रा, विशालाक्षी, मंगला, विजया तथा जया नामक देवियाँ कलश के मन्त्रपूत जल से तुम्हें अभिषिक्त करें ।

**मङ्गला नन्दिनी भद्रा लक्ष्मीः कीर्तिर्यशस्विनी ॥48॥**
**पुष्टिर्मेधा शिवा साध्वी यशा शोभा जया धृतिः ।**
**श्रीनन्दा च सुनन्दा च नन्दिनी नन्दपूजिता ॥49॥**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।**

हे साधक ! मंगला, नन्दिनी, भद्रा, लक्ष्मी, कीर्ति, यशस्विनी, पुष्टि, मेधा, शिवा, साध्वी, यशा, शोभा, जया, धृतिः, श्रीनन्दा, सुनन्दा, नन्दिनी तथा नन्दपूजिता नामक देवियाँ कलश के मन्त्रपूत जल से तुम्हें अभिषिक्त करें ।

**विजया मङ्गला भद्रा धृतिः शान्तिः शिवाः क्षमाः ॥50॥**
**सिद्धिस्तुष्टिरुमापुष्टिः श्रीः ऋद्धिश्च रतिस्तथा ।**
**दीप्ता कान्तिर्यशोलक्ष्मीरीश्वरी बुद्धिरेव च ॥51॥**
**एतास्त्वामभिषिंचन्तु मन्त्रपूतेन वारिणा ।**

हे अभिषेकार्थिन् ! विजया, मंगला, भद्रा, धृतिः, शान्ति, शिवा, क्षमा, सिद्धि, तुष्टि,

उमा, पुष्टि, श्री, ऋद्धि, रति, दीप्ता, कान्ति, यशोलक्ष्मी, ईश्वरी तथा बुद्धि नामक देवियाँ कलश के मन्त्रपूत जल से तुम्हें अभिषिक्त करें ।

**चक्री जयावती ब्राह्मी जयन्ती चापराजिता ॥52॥**
**अजिता मानवी श्वेता दितिश्चाऽदितिरेव च ।**
**माया चैव महामाया मोहिनी क्षोभिणी तथा ॥53॥**
**कमला विमला गौरी शरण्यम्बुधिसुन्दरी ।**
**दुर्गा क्रियाऽरुन्धती च घण्टाकर्णा कपालिनी ॥54॥**
**एतास्त्वामभिषिंचन्तु मन्त्रपूतेन वारिणा ।**

हे साधक ! चक्री, जयावती, ब्राह्मी, जयन्ती, अपराजिता, अजिता, मानवी, श्वेता, दिति, अदिति, माया, महामाया, मोहिनी, क्षोभिणी, कमला, विमला, गौरी, शरणी, अम्बुधिसुन्दरी, दुर्गा, क्रिया, अरुन्धती, घण्टाकर्णा तथा कपालिनी कलश के मन्त्रपूत इस जल से तुम्हारा अभिषेक करें ।

**रौद्री काली च मायूरी त्रिनेत्रा चापराजिता ॥55॥**
**सुरूपा बहुरूपा च तथैव विग्रहात्मिका ।**
**चर्चिका चापरा ज्ञेया तथैव सूरपूजिता ॥56॥**
**एतास्त्वामभिषिंचन्तु मन्त्रपूतेन वारिणा ।**

हे साधक ! रौद्री, काली, मायूरी, त्रिनेत्रा, परा, अजिता, सुरूपा, बहुरूपा, विग्रहा आत्मिका, चर्चिका, अपरा, अज्ञेया तथा सुरपूजिता संज्ञक शक्तियाँ तुम्हें कलश के मन्त्रपूत जल से अभिषिक्त करें ।

**वैवस्वती च कौमारी तथा माहेश्वरी परा ॥57॥**
**वैष्णवी च महालक्ष्मीः कार्तिकी कौषिकी तथा ।**
**शिवदूती च चामुण्डा मुण्डमालाविभूषिता ॥58॥**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।**

हे साधक ! वैवस्वती, कौमारी, माहेश्वरी, वैष्णवी, महालक्ष्मी, कार्तिकी, कौषिकी, शिवदूती, चामुण्डा तथा मुण्डमालाविभूषिता महाकाली तुम्हें कलश के मन्त्रपूत जल से अभिषिक्त करें ।

**इन्द्रोऽग्निश्च यमश्चैव निर्ऋतिर्वरुणस्तथा ॥59॥**
**पवनो धनदेशानौ ब्रह्माऽनन्तो दिगीश्वराः ।**
**एतास्त्वामभिषिञ्चिन्तु मन्त्रपूतेन वारिणा ॥60॥**

हे साधक ! इन्द्र, अग्नि, यम, निर्ऋति, वरुण, पवन, कुबेर, ईशान, ब्रह्मा तथा अनन्त नामक दिक्पति तुम्हें कलश के मन्त्रपूत जल से अभिषिक्त करें ।

संवत्सरश्चायनौ च मासाः पक्षौ दिनानि च ।
तिथयश्चाभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥61॥

वर्ष, अयन, मास, पक्ष, दिन तथा तिथियाँ तुम्हें इस कलश के मन्त्रपूत जल से अभिषिक्त करें ।

रविः सोमः कुजः सौम्यो गुरुः शुक्रः शनैश्चरः ।
राहुः केतुश्च सततमभिषिञ्चन्तु ते ग्रहाः ॥62॥

हे साधक ! रवि, सोम, मंगल, बुध, गुरु, शुक्र, शनैश्चर, राहु तथा केतु नामक नौ ग्रह इस मन्त्रपूत कलश-जल से निरन्तर तुम्हें अभिषिक्त करें ।

नक्षत्रं करणं योगोऽमृतं सिद्धिस्ततः परम् ।
दग्धं पापं तथा भद्रा योगा वाराः क्षणास्तथा ॥63॥
वारवेला कालवेला दण्डराश्यादयस्तथा ।
अभिषिञ्चन्तु सततं मन्त्रपूतेन वारिणा ॥64॥

हे साधक ! नक्षत्र, करण, योग, अमृत, सिद्धि, दग्धपाप, भद्रा, योग, वारा, क्षण, वारवेला, कालवेला, दण्ड तथा राशि आदि इस मन्त्रपूत कलश-जल से तुम्हें निरन्तर अभिषिक्त करें ।

असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः ।
कपाली भीषणाख्यश्च संहारोऽष्टौ च भैरवाः ॥65॥
अभिषिञ्चन्तु सततं मन्त्रपूतेन वारिणा ।

हे शिष्य ! असितांग, रुरु, चण्ड, क्रोध, उन्मत्त, कपाली, भीषण तथा संहार नामक अष्ट भैरव इस मन्त्रपूत कलश-जल से तुम्हें निरन्तर अभिषिक्त करते रहें ।

डाकिनीपुत्रकाश्चैव राकिणीपुत्रकास्तथा ॥66॥
लाकिनीपुत्रकाश्चान्ये काकिनीपुत्रकाः परे ।
शाकिनीपुत्रका भूयो हाकिनीपुत्रकास्तथा ॥67॥
ततश्च दक्षिणीपुत्रा देवीपुत्रास्ततः परम् ।
मातृणां च तथा पुत्रा ऊर्ध्वमुख्याः सुताश्च वै ॥68॥
अधोमुख्याः सुताश्चैव उन्मुख्याश्च सुताः परे ।
अभिषिञ्चन्तु ते सर्वे मन्त्रपूतेन वारिणा ॥69॥

डाकिनीपुत्र, राकिणीपुत्र, लाकिनीपुत्र, काकिनीपुत्र, शाकिनीपुत्र, हाकिनीपुत्र, दक्षिणीपुत्र, देवीपुत्र, अष्टमातरपुत्र, ऊर्ध्वमुखी के पुत्र, अधोमुखी के पुत्र तथा उन्मुखी आदि के पुत्र मन्त्रपूत कलश-जल से तुम्हें अभिषिक्त करें ।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥70॥

हे साधक ! ब्रह्मा, विष्णु, रुद्र, ईश्वर तथा सदाशिव मन्त्रपूत कलश-जल से तुम्हें अभिषिक्त करें ।

**पुरुषः प्रकृतिश्चैव विकाराश्चैव षोडशः ।**
**आत्माऽन्तरात्मा परमज्ञानात्मानः प्रकीर्तिताः ॥71॥**
**आत्मनश्च गुणाश्चैव स्थूलाः सूक्ष्माश्च येऽपरे ।**
**एते त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥72॥**

हे साधक ! पुरुष, प्रकृति, महदादि सोलह विकार, आत्मा, अन्तरात्मा, परमात्मा, ज्ञानात्मा, तीन गुण, अन्य भी तो स्थूल-सूक्ष्मादि तत्त्व हैं, वे सभी मन्त्रपूत कलश-जल से तुम्हारा अभिषेक करें ।

**वेदादिबीजं हुंबीजं स्त्रीबीजं मीनकेतनम् ।**
**शक्तिबीजं रमाबीजं मायाबीजं सुधाकरम् ॥73॥**
**चिन्तामणिर्महाबीजं नारसिंहं च शाङ्करम् ।**
**मार्तण्डभैरवं दौर्गं बीजं श्रीपुरुषोत्तमम् ॥74॥**
**गाणपत्यं च वाराहं कालीबीजं भयापहम् ।**
**एतानि चाभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥75॥**

वेदादिबीज ओंकार, वराहबीज हुं, स्त्रीबीज स्त्रीं, मीनकेतनबीज क्लीं, शक्तिबीज सौः, रमाबीज श्रीं, मायाबीज ह्रीं, सुधाकरबीज सं, महाबीज चिन्तामणि र्क्ष्म्र्यौंऊं, नारसिंह बीज क्ष्रौं, शांकरबीज हं, मार्तण्डभैरवबीज हर्ष्व्र्यूं* सूर्यबीज मं, भैरवबीज भं, (ओं ह्री हुं†) दुर्गाबीजं दुं तथा श्रीपुरुषोत्तमबीज क्लीं, गणपतिबीज गं, वाराहबीज हूं तथा भयविनाशक कालीबीज क्रीं मन्त्रपूत कलश-जल से तुम्हारा अभिषेक करें ।

**गङ्गा गोदावरी रेवा यमुना च सरस्वती ।**
**आत्रेयी भारती चैव सरयूर्गण्डकी तथा ॥76॥**
**करतोया चन्द्रभागा श्वेतगङ्गा च कौशिकी ।**
**भोगवती च पाताले स्वर्गे मन्दाकिनी तथा ॥77॥**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।**

हे प्रिय ! गंगा, गोदावरी, नर्मदा, यमुना, सरस्वती, आत्रेयी, भारती, सरयू, गण्डकी, करतोया, चन्द्रभागा, श्वेतगंगा, कौशिकी अर्थात् विश्वामित्री, पातालप्रवाहिनी भोगवती तथा स्वर्गप्रवाहिनी गंगा मन्त्रपूत कलश-जल से तुम्हारा अभिषेक करें ।

---

* आकाशमग्निपवनसाद्यान्तार्धीशबिन्दुमत् ।
मार्तण्डभैरवं नाम बीजमेतदुदाहतम् ॥ (पुरश्चर्यार्णवेऽष्टमतरङ्गे)

† तारत्रपारोषबीजम् ...... । (पुरश्चर्याणवे एकादशतरङ्गे)

**भैरवो भीमरूपश्च शोणो घर्घर एव च ॥78॥**
**सिन्धुश्चैव ह्रदश्चैव तथा पातालसम्भवाः ।**
**एते त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥79॥**

भयंकर गर्जना करते हुए बहने वाला विशालाकार शोण, घर्घर सिन्धु नामक महानद तथा धरा को फोड़कर पाताल से निकलने वाले गहरे ह्रद अर्थात् ताल (स्रोत) मन्त्रपूत कलश-जल से तुम्हारा अभिषेक करें ।

**यानि कानि च तीर्थानि पुण्यान्यायतनानि च ।**
**तानि त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥80॥**

हे अभिषेक्य साधक ! उपर्युक्तों के अतिरिक्त भी जो महान् और पवित्र तीर्थ अर्थात् जलनिधि हैं, वे सब भी मन्त्रपूत कलश-जल से तुम्हारा अभिषेक करें ।

**मतिश्च वल्लभा वह्नेर्वषट्कूर्चमतः परम् ।**
**वौषट्कारं हुं फट्कारमभिषिञ्चन्तु सर्वदा ॥81॥**

नमः, अग्निप्रिया स्वाहा, वषट्, हुं, वौषट् तथा फट् स्वरूप जो षडंगमन्त्र हैं, वे भी मन्त्रपूत कलश-जल से तुम्हारा अभिषेक करें ।

**जम्बुद्वीपादयो द्वीपाः सागरा लवणादयः ।**
**अनन्ताद्यास्तथा नागाः सर्पा ये तक्षकादयः॥82॥**
**एते त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।**

जम्बु, प्लक्ष, शाल्मली, कुश, क्रौंच, शाक तथा पुष्कर नामक सप्तद्वीप, लवण, इक्षु, सुरा, घृत, दधि, क्षीर तथा शुद्ध जल वाले सात सागर, नागराज अनन्तसहित समस्त नाग जातियाँ तथा सर्पराज वासुकिसहित तक्षकादि समस्त सर्प जातियाँ मन्त्रपूत कलश-जल से तुम्हारा अभिषेक करें ।

**नश्यन्तु प्रेतकूष्माण्डा राक्षसा दानवाश्च ये ॥83॥**
**पिशाचा गुह्यका भूता अभिषेकेण ताडिताः ।**

प्रेत, कूष्माण्ड, राक्षस, दानव, पिशाच, गुह्यक तथा भूतदि हैं वे सभी अभिषेक के पवित्र कलश-जल से प्रताडित होकर नष्ट हो जायँ ।

**अलक्ष्मीः कालकर्णी च पापानि च महान्ति च ॥84॥**
**नश्यन्तु चाभिषेकेण ताराबीजेन ताडिताः ।**

हे साधक ! भगवती तारा के बीज 'स्त्रीं' से अभिमन्त्रित पवित्र कलश-जल से प्रताडित अलक्ष्मी, कालकर्णी तथा बड़े-बड़े पातक भी नष्ट हो जायें ।

**रोगाः शोकाश्च दारिद्र्यं दौर्बल्यं चित्तविक्रिया ।**
**नश्यन्तु चाभिषेकेण वाग्बीजेनैव ताडिताः ॥85॥**

हे साधक ! तुम्हारे सभी रोग, शोक, दारिद्र्य, दौर्बल्यं तथा भ्रान्त्यादि चित्तविकार वाग्बीज 'ऐं' से अभिमन्त्रित इस पवित्र कलश-जल के अभिषेक से नष्ट हो जायें।

***लोकानुरागत्यागश्च दौर्भाग्यमपि दुर्यशः ।**
**नश्यन्तु चाभिषेकेण मन्मथेन च ताडिताः ॥86॥**

साधक के प्रति जनानुराग की समाप्ति, दुर्भाग्य, अपयश आदि भी कामबीज 'क्लीं' से ताडित होकर नष्ट हो जायें ।

**तेजो ह्रासो बलह्रासो बुद्धिह्रासस्तथैव च ।**
**नश्यन्तु चाभिषेकेण शक्तिबीजेन ताडिताः ॥87॥**

साधक के वर्चस्, बल और बुद्धि का ह्रास शक्तिबीज 'सौं' से अभिमन्त्रित कलश-जल से ताड़ित होकर नष्ट हो जायें ।

**विषाऽपमृत्युरोगाश्च डाकिन्यादिभयं तथा ॥88॥**
**घोराभिचाराः क्रूराश्च ग्रहा नागास्तथा परे ।**
**नश्यन्तु चाभिषेकेण कालीबीजेन ताडिताः ॥89॥**

हे साधक ! शत्रुओं द्वारा तुम पर किये गये समस्त विष, अपमृत्यु, रोग, डाकिन्यादि-भय, तथा उनके भयंकर अभिचार-प्रयोग क्रूर ग्रहों तथा नागादि से उत्पन्न होने वाले सभी भय कालीबीज 'क्रीं' से अभिमन्त्रित इस कलश-जल के अभिषिंचन से नष्ट हो जायें ।

### साधकायाशीर्वादप्रदानम्

**नश्यन्तु विपदः सर्वाः सम्पदः सन्तु सुस्थिराः ।**
**अभिषेकेण शाक्तेन पूर्णाः सन्तु मनोरथाः ॥90॥**

हे देवि ! अन्त में इस शाक्तकौलाभिषेकोत्सव में सम्मिलित सभी साधकों और साधिकाओं सहित अभिषेक्ता गुरु अभिषिक्त साधक को आशीर्वाद प्रदान करे—

'हे कौलसाधक ! इस शाक्ताभिषेक से तुम्हारे जीवनमार्ग में आने वाली समस्त विपदाएँ दूर हों । तुम्हें सर्वदा अचल सम्पदाएँ प्राप्ति हों और तुम्हारी सभी मनोकामनाएँ पूर्ण हों ।'

### साधकाय पुनर्दीक्षा

**ततो गुरुः प्राप्तमन्त्रं दीक्षयेत्पुनरेव हि ।**
**तदा सिद्धिर्भवेत्सत्यं नान्यथा वचनं मम ॥91॥**

अभिषेक के पश्चात् मन्त्रप्राप्ति शिष्य को गुरु पुनः दीक्षा दे । ऐसा करने पर ही निश्चितरूप से सिद्धि की प्राप्ति होती है, अन्यथा नहीं ।

---

* अधिकपाठः क्वचित्

गुरोः दक्षिणाप्रदानम्

**ततो देवीं गुरुं चैव प्रणमेद् बहुधा मुदा ।**
**दक्षिणा गुरवे दद्यात् स्वर्णकाञ्चनमानतः ॥92॥**

गुरु से दुबारा दीक्षा प्राप्त करने के बाद साधक को चाहिये कि वह भगवती महामाया कामाख्या और अपने गुरु को प्रणाम करके गुरु को सम्मानपूर्वक स्वर्णकांचनादि के रूप में शास्त्र-विहित दक्षिणा प्रदान करे ।

**नानावस्त्रैरलङ्कारैर्गन्धमाल्यादिभिस्तथा ।**
**तोषयेत्स्तुतिवाक्यैश्च प्रणमेत्पुनरेव हि ॥93॥**

इसके अलावा भी दीक्षित शिष्य को चाहिये कि वह विविध प्रकार के वस्त्रों, आभूषणों, गन्धमाल्यादिकों तथा प्रशंसावचनों द्वारा गुरु को प्रसन्न कर उन्हें बार-बार प्रणाम करे ।

श्रीगुरुणाशीर्वादप्रदानम्

**कायेन मनसा वाचा गुरुः कुर्यात् तथाशिषः ।**
**वात्सल्यैर्विविधैः शिष्यं ग्राहयेत् तत्त्वमुत्तमम् ॥94॥**

दीक्षित शिष्य से प्रभूत दक्षिणा प्राप्त करने के बाद गुरु को चाहिये कि वह मन, वाणी, कर्म तथा स्नेहिल वचनों से उसे आशीष दे और उत्तम कोटि का मद्य पिलाये ।

दीक्षानन्तरं सर्वैः सहानन्दोत्सवः

**गुरुश्च भैरवैः सार्द्धं शक्तिभिर्विहरेन्मुदा ।**
**भैरवाः शक्तयश्चापि कुर्युराशीः सुयत्नतः ॥95॥**

शिष्य को उत्तम कोटि का मद्य प्रदान करने के बाद गुरु को भी चाहिये कि वह वहाँ विद्यमान भैरवोंसहित लताओं के साथ प्रसन्नतापूर्वक उन्मुक्त विहार करे । भैरवों और भैरवियों को भी चाहिये कि वे नव अभिषिक्त दीक्षित साधक को मनसा, वाचा कर्मणा आशीष दें ।

अष्टमे दिवसे पुनरभिषेचनम्

**तथा त्रिदिवसं व्याप्य भोजयेद् भैरवान् बुधः ।**
**अष्टमे दिवसे शिष्यं पुनः कुर्यात् तु सेचनम् ॥96॥**
**ताम्रपात्रोदकैर्देवि ! विद्यारत्नं जपन् सुधीः ।**
**कुल्लुकांश्च तथा सप्तसम्पत्तिहेतवे प्रिये ! ॥97॥**

हे देवि ! इस प्रकार बुद्धिमान् गुरु को चाहिये कि वह शेष तीन दिनों तक भैरवों के साथ चक्रालय में ही रुक कर विहार करे तथा आठवें दिन साधक की समस्त आकांक्षाओं

की पूर्ति के लिये कुल्लकादिसहित मन्त्रराज कामाख्या मन्त्र का जप करते हुए ताम्र-कलश के जल से पुनः उसका अभिषेक करे ।

### पूर्णशाक्ताभिषेकसमाप्तिः

**शक्तिभ्यो भैरवेभ्योऽपि ततो वस्त्रादिभूषणम् ।**
**दद्यात्प्रयत्नतः साधुर्विद्धि देवि ! समापनम् ॥98॥**

हे पार्वति ! अन्त में साधक को चाहिये कि वह लताओं और भैरवों को भी आदरपूर्वक वस्त्रभूषणादि प्रदान कर उन्हें विसर्जित करे । दे देवि ! उक्त सभी क्रियाओं के सम्पन्न होने के साथ ही अभिषेक-कर्म की समाप्ति समझनी चाहिये ।

### श्रीदेव्याः कौलगुरुलक्षणजिज्ञासा

**श्रीदेव्युवाच**

**श्रुतं रहस्यं देवेश ! चाऽभिषेचनकर्मणि ।**
**गुरुः कौलाधिकारी स्यादत्र तन्मे वद प्रभो ! ॥99॥**

श्रीपार्वती ने भगवान् शिव से कहा—हे महादेव ! शाक्ताभिषेक की रहस्यात्मक विधियों के बारे में मैंने जान लिया । आपने कहा है कि उक्त अभिषेक क्रिया की सिद्धि के लिये योग्य गुरु और योग्य शिष्य की अपेक्षा होती है । कृपया आप यह बताइये कि ऐसे कौल अधिकारी गुरु के क्या लक्षण हैं ?

### श्रीशिवेन कौलगुरोर्लक्षणनिरूपणम्

**श्रीशिव उवाच**

**महाज्ञानी कौलिकेन्द्रः शुद्धो गुरुपरायणः ।**
**निग्रहाऽनुग्रहे शक्तः शिष्यपालनतत्परः ॥100॥**
**पुत्रदारादिभिर्युक्तः सज्जनस्तु प्रपूजितः ।**
**श्रद्धावानागमे नित्यं सोऽधिकर्ता न चान्यथा ॥101॥**

श्रीशिव ने कहा—हे देवि ! महान् ज्ञानी, कौलिकों में श्रेष्ठ, शुद्धाचरण, गुरुभक्त, निग्रह और अनुग्रह में समर्थ, शिष्यों के कल्याण में रत, पुत्रस्त्री आदि परिवारजनों से सम्पन्न, सज्जनों द्वारा नित्य सम्मानित तथा श्रद्धावान् साधक ही कौलगुरु बनने का अधिकारी हो सकता है, अन्य नहीं ।

### गुरुत्वेऽनधिकारित्वकथनम्

**अन्धं खञ्जं तथा रुग्णं स्वल्पज्ञानयुतं पुनः ।**
**सामान्यकौलं वरदे ! वर्जयेन्मतिमान् सदा ॥102॥**

हे देवि ! किसी अन्ध, खंज, रुग्ण, अल्पज्ञ तथा साधारण कौल साधक को भी गुरु नहीं बनाना चाहिये ।

उदासीनाद् दीक्षा वन्ध्या नारी इव

**उदासीनं विशेषेण वर्जयेन्मतिमान् सदा ।**
**उदासीनमुखाद् दीक्षा वन्ध्या नारी यथा प्रिये ॥103॥**

हे प्रिये ! संसार से उदासीन (विरक्त संन्यासी) किसी व्यक्ति को तो विशेष रूप से कभी गुरु बनाना ही नहीं चाहिये । उदासीन गुरु से ली गयी दीक्षा वन्ध्या नारी की भाँति निष्फल होती है ।

उदासीनगुरुणा दीक्षितस्य पदे पदे विघ्नाः

**अज्ञानाद् यदि वा मोहादुदासीनात्तु पामरः ।**
**अभिषिक्तो भवेत् देवि ! विघ्नस्तस्य पदे पदे ॥104॥**

हे देवि ! यदि कोई व्यक्ति अज्ञान अथवा भूल से संन्यासी व्यक्ति से दीक्षा प्राप्त कर लेता है, तो ऐसे नीच व्यक्ति के जीवन में पद-पद पर बाधायें आती हैं ।

उदासीनतः दीक्षा निष्फला

**किं तस्य जपपूजाभिः किं ध्यानैः किं च भक्तितः ।**
**सर्वं हि विफलं तस्य नरकं याति चान्तिमे ॥105॥**

हे देवि ! विरक्त गुरु से दीक्षित साधक का जप, पूजा, ध्यान तथा देवता के प्रति भक्ति सब कुछ निष्फल होता है और मृत्यु के अनन्तर ऐसा साधक नरक में जाता है ।

उदासीनतः दीक्षा नरकाय भवति

**कल्पकोटिशतं देवि ! भुङ्क्ते स नरकं सदा ।**
**ततो हि बहुजन्मेभ्यो देवीमन्त्रमवाप्नुयात् ॥106॥**

हे देवि ! विरक्त गुरु से दीक्षा लेने वाला साधक करोड़ों कल्पों तक नरक भोगने के बाद अनेक जन्मों के पश्चात् किसी योग्य कौलगुरु से देवी की साधना का मन्त्र प्राप्त करने में सफल होता है ।

गृहस्थकौलगुरुतः पुनर्दीक्षायाः ग्राह्यत्वम्

**ततो हि विहितं शुद्धं गृहस्थं गुरुमालभेत् ।**
**अभिषेचनकर्माणि पुनः कुर्यात्प्रयत्नतः ॥107॥**

हे देवि ! दुर्भाग्य से यदि कोई साधक उदासीन गुरु से दीक्षा प्राप्त कर ले, तो उसे चाहिये कि किसी पवित्राचरण गृहस्थ गुरु से दीक्षा लेकर उससे विधिपूर्वक पुनः अभिषेक-कर्म सम्पादित कराये ।

**सफलं हि सदा कर्म सर्वं तस्य भवेद् ध्रुवम् ।**
**विद्यापि जननी तुल्या पालितं सततं प्रिये ॥108॥**

अयोग्य गुरु को त्यागकर योग्य कौलगुरु से पुनः दीक्षित होने के पश्चात् साधक जो भी साधना करता है, वह सफल होती है और कुलविद्या भी माता की भाँति सर्वदा उसका पालन करती है ।

### कौलिकगुरुतः पुनरभिषेचनम्

**यथा पशुं परित्यज्य कौलिकं गुरुमालभेत् ।**
**उदासीनं परित्यज्य तथाऽभिषेचनं मतम् ॥109॥**

हे देवि ! जिस प्रकार कोई साधक पशुगुरु को छोड़कर कौलगुरु का वरण करता है, उसी प्रकार उदासीन गुरु का त्याग कर योग्य गृहस्थ गुरु से अभिषिक्त और दीक्षित होना चाहिये ।

**अभिषिक्तः शिवः साक्षादभिषिक्तो हि दीक्षितः ।**
**स एव ब्राह्मणो धन्यो देवीदेवपरायणः ॥110॥**

हे पार्वति ! योग्य और अधिकारी कौलगुरु से अभिषिक्त साधक साक्षात् शिव है और ऐसा अभिषिक्त साधक ही दीक्षित कहा जाता है । वही ब्राह्मण है, वही सच्चा देवी-देव भक्त है । वास्तव में ऐसा अभिषिक्त साधक धन्य है ।

### गृहस्थगुरुतो दीक्षा सर्वार्थसाधिकी

**तस्यैव सफलं जन्म धरण्यां शृणु पार्वति ! ।**
**तस्यैव सफलं कर्म तस्यैव सफलं धनम् ॥111॥**
**तस्यैव सफलो धर्मः कामश्च सफलो मनुः ।**
**दीक्षा हि सफला देवि ! क्रिया च सफला तनुः ॥112॥**

हे पार्वति ! इस धरती पर गृहस्थ कौलगुरु से अभिषिक्त और दीक्षित साधक का ही जन्म सफल है, उसी के कर्म सफल हैं तथा उसी का धन सार्थक है । ऐसे साधक द्वारा सम्पादित धर्म और काम सफल हैं, उसी की दीक्षा, क्रियाएँ तथा शरीर सफल हैं ।

**सर्वं हि सफलं तस्य गिरिजे ! किं बहु वचः ।**
**यत्र देशे वसेत्साधुः सोऽपि वाराणसीसमः ॥113॥**
**तस्य क्रोडे वसन्तीह सर्वतीर्थानि निश्चितम् ।**
**सत्यं सत्यं महामाये ! पुनः सत्यं मयोदितम् ॥114॥**

हे गिरिजे ! अधिक क्या कहूँ ? ऐसे साधक का सब कुछ सफल है । ऐसा साधक जहाँ भी रहता है, वह स्थान काशी के समान पवित्र है । समस्त तीर्थ उसकी गोद में निवास करते हैं । हे महामाये ! मेरा यह कथन सत्य है, सत्य है, इसमें सन्देह नहीं ।

शाक्ताभिषेकविधिः महीयसी

**उक्तानि यानि यानीह सेचनानि च पार्वति !**
**सर्वतन्त्रेषु नाऽन्यस्य कलां नाऽर्हन्ति षोडशीम् ॥115॥**

हे पार्वति ! विभिन्न तन्त्रों में जो भी अभिषेक-विधियाँ बतायी गयी हैं, वे इस अभिषेक विधि का, जिसका निरूपण मैंने अभी यहाँ किया है, महत्त्व में षोडशांश भी नहीं है ।

**योग्यं गुरुं तथा शिष्यं विनैतत्पटलं न हि ।**
**जायते देवदेवेशि ! सत्यं सत्यं मयोदितम् ॥116॥**

हे देवि ! मैं सत्य कह रहा हूँ । योग्य गुरु और योग्य शिष्य के बिना मेरे द्वारा निरूपित यह अभिषेक हो ही नहीं सकता ।

**इदं तु सेचनं देवि ! त्रिषु लोकेषु दुर्लभम् ।**
**गणेशः पात्रमत्रैव कार्तिकेयोऽपि पार्वति ! ॥117॥**

हे देवि ! मेरे द्वारा वर्णित विधि से सम्पन्न अभिषेक तीनों लोकों में दुर्लभ है । ऐसे अभिषेक का पात्र गणेश और कार्तिकेय ही है ।

**मम तुल्यो ब्रह्मतुल्यो विष्णुतुल्योऽत्र भाजनम् ।**
**पञ्चवक्त्रैश्च शक्तो न वर्णितुं परमेश्वरि ! ॥118॥**

हे परेशि ! इस प्रकार के अभिषेक का पात्र वही हो सकता है, जो मुझ जैसा, ब्रह्मा जैसा या विष्णु जैसा हो । अधिक क्या ? मैं अपने पाँच मुखों से भी इस अभिषेक की महिमा का वर्णन करने में सक्षम नहीं हूँ ।

शाक्ताऽभिषेकविधेर्गोपनीयत्वम्

**इति ते कथितं गुप्तं सेचनं परमं महत् ।**
**गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥119॥**

हे देवि ! मैंने तुम्हारे समक्ष अत्यन्त महिमाशाली और अति गोपनीय शाक्ताभिषेक का निरूपण किया है । मेरा अनुरोध है कि इसे गोपनीय ही रखना, इसका उल्लेख किसी अनधिकारी से न करना ।

**यथा रतिर्गोपनीया यथा कि स्तनमण्डलम् ।**
**यथा योनिर्गोपनीया तथाऽभिषेचनं परम् ॥120॥**

हे भगवति ! जिस प्रकार रतिकर्म गोपनीय है, जैसे उरोजमण्डल गोपनीय है, जैसे योनि गोपनीय है, उसी प्रकार मेरे द्वारा वर्णित यह अभिषेक-कर्म भी गोपनीय है ।

**निखाते धनमागत्य गोपयेत् तु यथा नरः ।**
**तथैव तु महामाये ! गोपनीयं ममाज्ञया ॥121॥**

इति श्रीकामाख्यातन्त्रे देवीशिवसंवादे सप्तमः पटलः समाप्तः ॥



हे महादेवि ! जिस प्रकार कोई व्यक्ति अपने धन को गहरे और गुप्त स्थान पर सुरक्षित करता है, उसी प्रकार तुम भी अभिषेक की इस विधि को अपने हृदय की गहराइयों में छिपा कर रखना, यह मेरा आदेश है ।

श्रीदेवीशिवसंवादरूपकामाख्यातन्त्र की रामचन्द्रपुरीकृत मीराश्री
हिन्दीविवृत्ति का सप्तम पटल समाप्त ।



# अथाष्टमः पटलः

मुक्तितत्त्वं प्रति देव्याः जिज्ञासा

**श्रीदेव्युवाच**

**मुक्तितत्त्वं महादेव ! वद मे करुणानिधे ! ।**
**यस्मिन् षड्दर्शनानीह चोपहास्यगतानि च ॥1॥**

श्रीदेवी ने पूछा—हे करुणानिधे ! जिस मुक्ति नामक तत्त्व के स्वरूप के विषय में किसी निर्णय पर न पहुँच पाने और परस्पर विपरीत बातें कहने के कारण न्याय-वेदान्तादि छह दर्शन उपहास के पात्र बनते हैं, आप उस मुक्ति के स्वरूप के बारे में मुझे बताइये ।

**श्रीशिव उवाच**

**श्रृणु देवि ! शुभे ! विज्ञे ! यत्पृष्टं तत्त्वमुत्तमम् ।**
**एतन्मर्म च देवेशि ! अहं वेद्मि तथा हरिः ॥2॥**

श्रीशिव ने कहा—हे कल्याणि ! विदुषि ! देवि ! जिस मुक्ति नामक तत्त्व के स्वरूप के विषय में तुमने पूछा है, उसे या तो मैं जानता हूँ, या विष्णु ।

श्रीशिवस्योत्तरम्
षड्दर्शनानि लोकमोहनान्येव

**मोदकेन तथा लोकः प्रतारयति बालकान् ।**
**लगुडेन यथा देवि ! बध्नाति दुर्जनं नृपः ॥3॥**
**तथा मुग्धीकृता लोका दर्शनैर्बर्बरो मया ।**
**दुर्जने यदि मुक्तिः स्याच्छङ्कीयति शुभानने ! ॥4॥**

हे देवि ! दर्शनों द्वारा मुक्ति के स्वरूप का ज्ञान नहीं कराया जा सकता । जिस प्रकार लड्डुओं से बच्चों को बहलाया या बहकाया जाता है, उसी प्रकार दर्शनों द्वारा अल्पबुद्धि लोगों को बहकाने के लिये मैने ही दर्शनों की रचना की है ।

इसके अतिरिक्त जिस प्रकार कोई शासक अपराधियों को कारागार आदि में बन्द कर उन्हें नियन्त्रित करता है, उसी प्रकार शास्त्रों में नरकादि में पतन का भय दिखाकर दुष्ट लोगों को दुष्कर्म से रोकने के लिये मैंने ही शास्त्रों का अवतरण किया है । बस, शास्त्रों का महत्त्व इतना है, इससे अधिक नहीं । हे पार्वति ! परस्पर-विरुद्ध और अनिश्चित बात कहने वाले शास्त्रों के अध्ययन या पठन से मुक्ति की बात तो शंकास्पद ही है ।

### षड्दर्शनकूपे पतिताः पशवः एव

**षड्दर्शनमहाकूपे पतिताः पशवः प्रिये ! ।**
**परमार्थं न जानन्ति दर्वी पाकरसं यथा ॥5॥**

हे पार्वति ! षड्दर्शन तो ऐसे गहरे अन्धकूप हैं, जिनमें गिरकर पशु व्यक्तियों को ज्ञान का प्रकाश कभी मिल ही नहीं सकता । दर्शनों के भ्रमजाल में फँसे पाशव लोग परमार्थ के ज्ञान का आनन्द उसी प्रकार प्राप्त नहीं कर सकते, जैसे कड़छी किसी व्यंजन के रस का आनन्द नहीं ले सकती ।

### दर्शनेषु मुक्तिनिषेधः

**न सारः कदलीवृक्षे नैरण्डे तु शुभानने ! ।**
**दर्शनेषु तथा मुक्तिर्नास्ति देवि ! मयोदितम् ॥6॥**

हे निष्पापदेवि ! जिस प्रकार कदली और एरण्ड के वृक्ष में कोई सारतत्त्व नहीं होता, उसी प्रकार दर्शन नि:सार हैं, उनमें मुक्तिरस का अभाव है ।

### दर्शनैर्मुक्त्याशा मृगमरीचिका एव

**यथा मरीचिकायास्तु निर्वर्तन्ते पुनर्मृगाः ।**
**दर्शनेभ्यो निवर्तन्ते तथा मुमुक्षवः पुनः ॥7॥**

हे पार्वति ! जिस प्रकार जल की लालसा में मरीचिका के पीछे भागते हुए मृग अन्त में निराश होकर वापस लौट आते हैं, उसी प्रकार दर्शनों में मुक्तितत्त्व खोजने वाले मुमुक्षु उनमें मुक्तितत्त्व न पाकर उन्हें छोड़कर साधना की ओर वापस लौट आते हैं ।

### कौतुकायैव शास्त्रोपयोगिता

**श्रीगुरोश्च प्रसादेन मुक्तिमादौ सदा लभेत् ।**
**विचरेत्सर्वशास्त्रेषु कौतुकाय ततः सुधीः ॥8॥**

हे पार्वति ! दर्शनों में भटकने से मुक्ति नहीं मिल सकती । इसलिये मुमुक्षु को चाहिये कि वह पहले श्रीगुरु को प्रसन्न कर उनसे मोक्षतत्त्व को जाने । इसके बाद मनोविनोद के लिये वह शास्त्रों का अध्ययन कर सकता है ।

### श्रीशिवेन मुक्तितत्त्वनिर्वचनम्

**मुक्तितत्त्वं प्रवक्ष्यामि सादरं शृणु पार्वति ! ।**
**शरीरधारणं यस्य कुर्वन्तीह पुनः पुनः ॥9॥**

अच्छा तो, हे पार्वति ! अब तुम उस मुक्तितत्त्व के स्वरूप के बारे में आदर और ध्यानपूर्वक सुनो, जिसे प्राप्त करने के लिये मानव इस धरा पर जन्म लेता है ।

**आदावनुग्रहो देव्याः श्रीगुरोस्तदनन्तरम् ।**
**तदाननात् ततो दीक्षा भक्तिः तस्याः प्रजायते ॥10॥**

हे देवि ! मुक्ति के लिये पहले तो भगवती के अनुग्रह की आवश्यकता होती है, फिर सद्गुरु की कृपा से उमके श्रीमुख से मन्त्रदीक्षा की । गुरुमुख से मन्त्रदीक्षा से साधक के हृदय में भगवती के प्रति अनन्य भक्ति उत्पन्न होती है ।

**ततो हि साधनं शुद्धं तस्माज्ज्ञानं सुनिर्मलम् ।**
**ज्ञानान्मोक्षो भवेत्सत्यमिति शास्त्रस्य निर्णयः ॥11॥**

हे देवि ! साधक में भगवती के प्रति अनन्य भक्ति से मोक्ष के लिये आवश्यक शुद्ध साधनों की उपलब्धि होती है और साधनप्राप्ति से विशुद्ध ज्ञान की प्राप्ति और ज्ञान से मोक्ष की प्राप्ति होती है, यही शाक्तशास्त्र का निर्णय है ।

मुक्तेश्चतुर्विधत्वकथनम्

**मुक्तिश्चतुर्विधा प्रोक्ता सालोक्यं तु शुभानने ! ।**
**सारूप्यं सहयोज्यं च निर्वाणं तु परात्परम् ॥12॥**

हे सुमुखि ! सालोक्य, सारूप्य, सहयोज्य और निर्वाण-भेद से मुक्ति चार प्रकार की कही गयी है । 'निर्वाण' मुक्ति का परात्पर स्वरूप है ।

**सालोक्यं वसतिर्लोके सारूप्यं तु स्वरूपता ।**
**सायुज्यं कलया युक्तं निर्वाणं तु मनोलयः ॥13॥**

हे पार्वति ! देवी के साथ उनके लोक में ही साधक का निवास सालोक्य मुक्ति, भगवती के स्वरूप की प्राप्ति सारूप्य मुक्ति, देवी की कलाओं से युक्त होना सायुज्य तथा उनके स्वरूप में मनस् का लय निर्वाणमुक्ति कहलाता है ।

सम्यक्लयः स्वरूपे देव्या जिज्ञासा

**श्रीदेव्युवाच**

**सम्यग् लयो जनस्यैव निर्वाणं यत् तु कथ्यते ।**
**तत् किं वद महादेव ! संशयं लयसात्कुरु ॥14॥**

देवी पार्वती ने कहा—हे शिव ! अभी आपने कहा कि व्यक्ति के मनस् अर्थात् अहन्ता का देवी में लय निर्वाण है । यह भी कहा जाता है कि जीव का पराशक्ति में सम्यक् लय निर्वाण है । मनस् और जीव में भेद है । तो कृपया यह बताकर आप मेरे सन्देह को दूर कीजिये कि पराशक्ति में मनस् का लय (जो व्यक्ति की जीवित अवस्था में ही सम्भव है) निर्वाण है, या जीव का लय (जो मृत्यु के बाद ही सम्भव है) निर्वाण है ?

श्रीशिव उवाच

**व्यक्तिर्लयात्मिका मुक्तिरसुराणां दयानिधे !।**
**दुर्जनत्वाल्लोपयित्वा क्रीडयामि सुरानहम् ॥15॥**

श्रीशिव ने कहा—हे देवि ! संसार में दो प्रकार के व्यक्ति होते है—आसुरीवृत्तिवाले और दैवीवृत्तिवाले । आसुरीवृत्तिवाले स्वभाव से दुष्ट होते हैं । उनकी भी लयात्मिका मुक्ति होती है, किन्तु यह मुक्ति इस लोक से उनकी दैहिक मुक्ति के रूप में होती है । मैं उन्हें मारकर सालोक्य, सारूप्य, सायुज्य अथवा निर्वाणरूपा मुक्ति नहीं देता, अपितु उन्हें उनके कर्मों के अनुसार पुन: जन्म देता हूँ । लेकिन, जो लोग दैवीवृत्ति वाले होते हैं, उन्हें मैं उनकी साधनानुसार सालोक्य, सारूप्य तथा सायुज्य मुक्ति प्रदान कर उनके साथ कीडा करता हूँ ।

**मनोलयात्मिका मुक्तिरिति जानीहि शङ्करि !।**
**प्राप्ता मया विष्णुना च ब्रह्मणा नारदादिभिः ॥16॥**

लेकिन, हे शाम्भवि ! वास्तविक मुक्ति तो मनोलयात्मिका ही होती है । जीव के बन्ध और मोक्ष का कारण तो उसका अपना मनस् ही है । मन का अपने इष्ट में विलयन हो जाना ही वास्तविक मोक्ष है । ऐसा मोक्ष प्राप्त करना साधारण साधक के वश में नहीं है । ऐसी मुक्ति तो स्वयं मैंने, विष्णु ने तथा नारदादि कुछ महर्षियों ने ही प्राप्त की है ।

**सालोकी केवलं यत् तु याति सारोप्ययुक् द्वयम् ।**
**त्रिधा सायोज्यवानेति निर्वाणी सर्वमेव हि॥17॥**

हे देवि ! सालोक्य मुक्ति में साधक मेरे लोक में निवास करते हैं, लेकिन, मुझमें वे आत्मसात् नहीं होते, उनका 'जीवात्मक अस्तित्व' अलग ही बना रहता है । 'सारोप्य' मुक्ति में साधक को 'शिवत्व' प्राप्त हो जाता है, उसे 'शिवोऽहं' का ज्ञान तो हो जाता है, लेकिन, 'सर्वोऽहम्' की अनुभूति नहीं होती, द्वैत बना रहता है । तीसरे प्रकार की मुक्ति 'सायुज्य' होती है । इसमें जीव शिव के साथ जुड़ तो जाता है, लेकिन, उसमें 'अहन्ता' बनी रहती है । निर्वाणमुक्ति में साधक को 'अहमेवमिदं सर्वम्' अर्थात् 'सब कुछ मैं ही हूँ' की अनुभूति हो जाती है ।

### नीलोत्पलदलश्यामाश्यामैव मुक्तिः

**नीलोत्पलदलश्यामा मुक्तिर्द्विदलवर्तिनी ।**
**मुक्तस्यैव सदा स्फीता स्फुरत्यविरतं प्रिये ! ॥18॥**

हे देवि ! नीलकमल की आभावली यह निर्वाण मुक्ति तो दो दलों 'शिव और जीव' के बीच 'शक्ति' के रूप में विद्यमान है । जीव और ईश के बीच विद्यमान शक्ति जब अपना विस्तार करती है, तो वह जीव की अहन्ता को अपने अन्दर समा लेती है । ऐसी स्थिति में जीव की अहन्ता 'देवी देहे प्रलीयते' जीव का अपने इष्ट के साथ निश्चल ऐक्य स्थापित

हो जाने पर जीव संसार से मुक्त हो जाता है । जीव का शक्ति में लय हो जाना ही निर्वाण है ।

**सनातनी जगद्वन्द्या सच्चिदानन्दरूपिणी ।**
**परा च जननी सैव सर्वाभीष्टप्रदायिनी ॥19॥**

हे पार्वति ! साधकों को आत्मसात् कर उन्हें लयात्मिका मुक्ति प्रदान करने वाली भगवती कामाख्या सनातनी, जगद्वन्दनीया, सच्चिदानन्दरूपिणी, समस्त ब्रह्माण्ड की जननी, साधकों की समस्त अभिलाषाओं को पूर्ण करने वाली परात्पर परमेश्वरी हैं ।

कुलज्ञानमेव मुक्तिज्ञानम्

**इष्टे निश्चलसम्बन्धः स च निर्वाणमीरितम् ।**
**मुक्तिज्ञानं कुलज्ञानं नान्यज्ञानं कुलेश्वरि ! ॥20॥**

इस प्रकार हे कुलस्वामिनि ! ! जैसा मैंने कहा कि इष्ट में अपने मन को विलीन कर निश्चल सम्बन्ध बना लेना ही निर्वाण है । मुक्ति के इस स्वरूप को समझना और उसकी अनुभूति करना ही 'कुलज्ञान' है । इससे भिन्न ज्ञान कुलज्ञान नहीं है ।

**साधूनां देवदेवेशि ! सर्वेषां विद्धि निश्चितम् ।**
**स्वर्गे मर्त्ये च पाताले ये ये मुक्ता भवन्ति हि ॥21॥**
**बभूवुश्च भविष्यन्ति सर्वेषां मुक्तिरीदृशी ।**

हे देवि ! तीनों लोकों में जो भी मुक्त हैं या होंगे, उनकी मुक्ति का सच्चा स्वरूप उनका अपने इष्ट में मनोलयात्मक ही होगा ।

मुक्तेः साधनं पञ्चतत्त्वम्

**तथा च साधनं ज्ञेयं पञ्चतत्त्वैश्च मुक्तिदम् ॥22॥**

इस मनोलयात्मिका मुक्ति का साधन मद्य, मांस, मत्स्य, मुद्रा तथा मैथुन नामक पंचतत्त्व ही है । इस प्रकार की मुक्ति इन पंचतत्त्वों के बिना किन्हीं अन्य साधन से सम्भव नहीं है ।

**अनुग्रहस्तु देव्या यः कुलमार्गप्रदर्शकः ।**
**दीक्षा कुलात्मिका देवि ! श्रीगुरोर्मुखपङ्कजात् ॥23॥**

हे देवि । निर्वाण प्राप्ति के लिये कुलमार्ग पर चलना आवश्यक है । कुलमार्ग का ज्ञान भगवती की कृपा के बिना सम्भव नहीं है । भगवती की कृपा से सद्गुरु के मुखकमल से कुलात्मिका दीक्षा प्राप्त होती है ।

### कुलद्रव्येषु भक्तिरेव मुक्तिप्रदा

**कुलद्रव्येषु या भक्तिः सा मोक्षदायिनी मता ।**
**ज्ञात्वा चैवं प्रयत्नेन कुलज्ञानं भजेद् बुधः ॥24॥**

हे पार्वति ! साधक को विश्वास होना चाहिये कि मद्यादि कुल द्रव्यों के प्रति अनुराग से मोक्ष की प्राप्ति होती है । ऐसा निश्चय करके ही उसे कुलज्ञान प्राप्ति के लिये प्रवृत्त होना चाहिये ।

**यदि भाग्यवशाद् देवि ! मन्त्रमेतत् तु लभ्यते ।**
**मुक्तेश्च कारणं तस्याः स्वयं ज्ञातं न चान्यथा ॥25॥**

हे देवि ! यदि सौभाग्य से किसी साधक को यह मन्त्र अर्थात् तथ्य ज्ञात हो जाये कि इष्ट में मनोलय ही मुक्ति है और इस मनोलय का साधन पंचतत्त्व है, तब उसे मुक्ति का साधन स्वयं ज्ञात हो जायेगा, अन्यथा नहीं । इस प्रकार भगवती के साथ साधक की अद्वैतानुभूति के अतिरिक्त मुक्ति और कुछ नहीं होती* ।

**अश्रुतं मुक्तितत्त्वं हि कथितं ते महेश्वरि ! ।**
**आत्मयोनिर्यथा देवि ! तथा गोप्यं ममाज्ञया ॥26॥**

इति श्रीकामाख्यातन्त्रे श्रीदेवीशिवसंवादे अष्टमः पटलः समाप्तः ।



हे माहेश्वरि ! मैंने तुम्हारे समक्ष मुक्ति के जिस स्वरूप का निर्वचन किया है, उसके बारे में अब तक किसी ने सुना भी नहीं । मुक्ति का यह स्वरूप और इसे प्राप्त करने के उपाय अतिगोपनीय हैं । तुम इसे स्वयोनि की भाँति ही गोपनीय रखना, यह मेरा आदेश है ।

श्रीदेवीशिवसंवादरूपकामाख्यातन्त्र की रामचन्द्रपुरीकृत मीराश्री हिन्दी विवृत्ति का अष्टम पटल समाप्त ।



---

* 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनः तत्त्वदर्शिनः' ॥ (गीता)
'ऋते ज्ञानान्न मुक्तिः' ।

# अथ नवमः पटलः

केऽयं कामाख्येति देव्याः प्रश्नः

**श्रीदेव्युवाच**

**कामाख्या या महादेव ! कीर्तिता कामरूपिणी ।**
**का सा वद जगन्नाथ ! कपटं मा कुरु प्रभो ! ।।1।।**

श्रीदेवी ने कहा—हे प्रभो ! आपने जिसे कामस्वरूपा कामाख्या कहा है, वह देवी वास्तव में है कौन ? आप कुछ छिपाइये नहीं, सब सच-सच बताइये ।

**कुर्यास्तु कपटं नाथ ! यदि मे शपथस्त्वयि ।**
**रतौ का कामिनी योनिं सम्यक् सन्दर्शयेत्पतिम् ।।2।।**

हे स्वामिन् ! यदि आप छिपायें तो, आपको मेरी शपथ है । वह कामिनी कौन है, जो रति के समय अपने पति को अपनी योनि को पूरी तरह भली भाँति दिखाती है ? (जैसा कि आपने योनिपूजा के सन्दर्भ में निरूपित किया है) नहीं न ? वह पति के अनुरोध पर गोपनीय अंग पति को दिखा देती है । हम दोंनों में परस्पर प्रेम है । इसलिये जिस कामिनी की चर्चा आप कर रहे हैं, उसका परिचय चाहे कितना ही गोपनीय हो, आप मुझसे छिपा नहीं सकते ।

**श्रीशिव उवाच**

**श्रुत्वैतद् गिरिजावाक्यं प्रहस्योवाच शङ्करः ।**
**श्रृणु देवि ! मम प्राणवल्लभे ! कथयामि ते ।।3।।**

श्रीपार्वती की बात सुनकर शिव ने हँसकर कहा—हे प्राणप्रिये ! सुनो, उसका नाम सुनो ।

**या देवी कालिका तारा सर्वविद्यास्वरूपिणी ।**
**कामाख्या सैव विख्याता सत्यं सत्यं न चान्यथा ।।4।।**

हे प्रिये । सर्वमन्त्रस्वरूपिणी जो देवी कालिका और तारा के नाम से प्रसिद्ध हैं, वही तो कामाख्या कही जाती है । मैं सत्य कह रहा हूँ । इसमें सन्देह न करो ।

**सैव ब्रह्मेति जानीहि संज्ञार्थं दर्शनानि च ।**
**विचरन्ति चोत्सुकानि यथा चन्द्रे चकोरकाः ।।5।।**

हे प्रिये ! कामाख्या ही 'ब्रह्म' है, ब्रह्माण्डस्वरूपा हैं । जिस प्रकार चन्द्रमा की अमृतमयी किरणों की उपलब्धि की आशा में चकोरगण शान्त-स्निग्ध ज्योत्स्ना के स्रोत को ढूँढ़ते हुए आकाश में विचरण करते हैं, उसी प्रकार समस्त प्राणी भगवती कामाख्या की सच्चिदानन्द-मयी आनन्दराशि में मूलस्रोतस्वरूपिणी भगवती कामाख्या की खोज में भटकते फिरते हैं ।

कामाख्या स्वरूपवर्णनम्

**अस्या हि जायते सर्वं जगदेतच्चराचरम् ।**
**लीयन्ते पुनरस्यां च सन्देहं मा कुरु प्रिये* ॥6॥**

हे पार्वति ! ब्रह्मस्वरूपिणी भगवती कामाख्या ही जगद्योनि हैं । समस्त स्थावर-जंगम संसार इन्हीं से जन्मता है, इन्हीं में स्थित रहता हे और कल्पान्त में इन्हीं में लीन हो जाता है । हे प्रिये ! तुम मेरी बातों में सन्देह न करो ।

**स्थूला सूक्ष्मा परा देवी सच्चिदानन्दरूपिणी ।**
**अमेयविक्रमा श्यामा करुणासागरा मता ॥7॥**

हे देवि ! सच्चिदानन्दस्वरूपिणी भगवती कामाख्या स्थूल से भी स्थूल और सूक्ष्म से भी सूक्ष्म हैं । करुणानिधि, अमितविक्रमशालिनी कामाख्या का एक नाम 'श्यामा' भी है ।

**मुक्तिमयी जगद्धात्री सदानन्दमयी तथा ।**
**विश्वम्भरी क्रियाशक्तिस्तारा चैव सनातनी ॥8॥**

कामाख्या देवी मुक्तिस्वरूपा, विश्व की धात्री, सर्वदा आनन्दरूपा, विश्व का भरण-पोषण करने वाली क्रियाशक्ति हैं । तारा संसार-तारिणी तथा नित्या हैं ।

कामाख्या एव दक्षिणाकाली

**यथा कर्मसमाप्तौ च दक्षिणा फलसिद्धिदा ।**
**तथा मुक्तिरसौ देवि ! सर्वेषां फलदायिनी ॥9॥**
**अतो हि दक्षिणा काली कथ्यते वरवर्णिनि ।**

हे शोभनांगि ! जिस प्रकार व्यक्ति के यज्ञादि कर्म की समाप्ति पर ऋत्विगादि को दक्षिणा देने से कर्म की सफलता मानी जाती है, उसी प्रकार इस संसार में जन्मे व्यक्ति के कर्मों के अनुसार मुक्ति आदि फल प्रदान करने के कारण कामाख्या को 'दक्षिणा काली' भी कहा जाता है ।

---

* 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रत्यभिनिविशन्ति तद् ब्रह्म' ।

काल्याः कृष्णवर्णकथनम्

**कृष्णवर्णा सदा काली कथ्यते वरवर्णिनि ॥10॥**
**उक्तानि सर्वतन्त्राणि तन्त्रेणाऽनेन निश्चितम् ।**

हे पार्वति ! कामाख्या कृष्णवर्णा हैं । इसलिये सभी तन्त्रों की भाँति इस तन्त्र में भी इन्हें 'काली' भी कहा है । इस प्रकार कामाख्या काली, तारा तथा श्यामा आदि नामों से जानी जाती हैं ।

कामाख्यातन्त्रस्य महत्त्वम्

**कृत्वा सङ्कल्पसिद्धौ तत्कामेषु पाठयेद् बुधः ॥11॥**
**पठित्वा श्रावयेद्वापि शृणोति पूजयेद्यदि ।**
**तं तं काममवाप्नोति श्रीमत्कालीप्रसादतः ॥12॥**
**यथा स्पर्शमणिर्देवि ! तथैतत्तन्त्रमुत्तमम् ।**
**यथा कल्पतरुर्दाता यथा ज्ञेयं मनीषिभिः ॥13॥**

हे देवि ! जिस भी अभिलाषा से बुद्धिमान् साधक इस कामाख्या का पाठ करता है, या इसे पढ़कर किसी को सुनाता है, या पूजन करता है, भगवती काली की कृपा से उसकी वह अभिलाषा अवश्य पूर्ण होती है । हे देवि ! मनीषियों के अनुसार यह कामाख्या तन्त्र पारसमणि और कल्पवृक्ष की भाँति साधकों के समस्त मनोरथों की पूर्ति करने वाला है ।

**यथा सर्वाणि रत्नानि सागरे सन्ति निश्चितम् ।**
**तथाऽत्र सिद्धयः सर्वा भुक्तिर्मुक्तिर्वरानने ! ॥14॥**

हे सुमुखि ! जिस प्रकार समस्त रत्न सागर में विद्यमान हैं, उसी प्रकार इस कामाख्या तन्त्र में कथित विधि के अनुसार भगवती कामाख्या काली की साधना में समस्त सिद्धियाँ तथा भोग और मोक्ष निहित हैं ।

**सर्वदेवाश्रयो मेरुर्यथा सिद्धं तथा पुनः ।**
**सर्वविद्यायुतं तन्त्रं शपथेन वदाम्यहम् ॥15॥**

हे देवि ! जिस प्रकार सुमेरु पर्वत समस्त देवताओं का आलय है, उसी प्रकार कामाख्यातन्त्र भी समस्त विद्याओं का आलय है, यह बात मैं शपथपूर्वक कह रहा हूँ ।

**यस्य गेहे स्थितं देवि ! तन्त्रमेतद् भयापहम् ।**
**रोगशोकपातकानां लेशो नास्ति कदाचन ॥16॥**

हे गौरि ! समस्त भीतियों को दूर करने वाला यह कामाख्यातन्त्र जिस व्यक्ति के घर (अर्थात् हृदय) में विद्यमान होता है, उसके जीवन में रोग, शोक तथा पातकों का अस्तित्व लेशमात्र भी नहीं होता ।

**तत्र दस्युभयं नास्ति ग्रहराजभयं न च ।**
**न चोत्पातभयं तत्र न च मारीभय तथा ॥17॥**

जिस साधक के गृह में कामाख्यातन्त्र है, उसे कभी भी चौरभय, ग्रहभय, राजभय, उत्पातभय तथा महामारी आदि का भय नहीं होता ।

**न पराजयमेषां हि भयं देवि ! मयोदितम् ।**
**भूत-प्रेत-पिशाचानां दानवानां च रक्षसाम् ॥18॥**

हे शिवे ! ऐसा साधक किसी से पराजित नहीं होता । उसे किसी भूत, प्रेत, पिशाच, दानव तथा राक्षस का भय भी नहीं होता ।

**न भयं क्वापि सर्वेषां व्याघ्रादीनां भयं च न ।**
**कूष्माण्डानां भयं नैव वह्न्यादीनां भयं न च ॥19॥**

उसे कभी भी और कहीं भी व्याघ्रादि क्रूर वन्यजीवों, कूष्माण्डों तथा अग्नि आदि पंचभूतों से भी डर नहीं होता ।

**विनायकानां सर्वेषां गन्धर्वाणां तथा च न ।**
**स्वर्गे मर्त्ये च पाताले ये ये सन्ति भयानकाः ॥20॥**

कामाख्यासाधक को विघ्न उपस्थित करने वाले विनायकादि विघ्नपतियों अथवा गन्धर्वादि मानवेतर देवजातियों अथवा स्वर्ग, धरती, पातालादि भुवनों में जो भी हिंसक प्राणी हैं, उनसे भय नहीं होता ।

**हिंस्रा विघ्नकराश्चैव न तेषां भयमीश्वरि ! ।**
**यमदूताः पलायन्ते विमुखा भयविह्वलाः ॥21॥**

हे भगवति ! जीवन में जो भी विघ्न उत्पन्न करने वाले अथवा हिंसक प्राणी हैं, उनका भय साधक में नहीं रह जाता । उसे देखकर डर से भयभीत यमराज के क्रूर दूत भी भाग खड़े होते हैं ।

**सत्यं सत्यं महादेवि ! शपथेन वदाम्यहम् ।**
**सम्पत्तिरतुला तत्र तिष्ठेत् तु साप्तपौरुषम् ॥22॥**
**वाणी तथैव देव्यास्तु प्रसादादचलेरिता ।**
**एतत् ते कथितं देवि ! न प्रकाश्यं कदाचन ॥23॥**

हे शाम्भवि ! मैं शपथपूर्वक सत्य कह रहा हूँ कि कामाख्या के उपासक को देवी की कृपा से सातपुस्तों तक चलने वाली महालक्ष्मी तथा अव्यभिचारिणी वाक्शक्ति भी प्राप्त होती है । हे पार्वति ! मैंने यहाँ तुमसे जो बात कही है, उसे किसी अनधिकारी व्यक्ति के सामने प्रकट नहीं करना ।

कामाख्याविद्यायामनधिकारिणः

**गोपनीयं गोपनीयं गोपनीयं सदा प्रिये !।**
**पशोरग्रे विशेषेण गोपनीयं प्रयत्नतः ॥24॥**

हे प्रिये ! इस रहस्य को गोपनीय ही रखना, विशेषतया किसी पशुभाव में स्थित व्यक्ति के सामने तो इसे पूर्णतः गोपनीय ही बनाये रखना ।

**भ्रष्टानां साधकानां च सान्निध्ये न वदेदपि ।**
**न दद्यात्काणखञ्जेभ्यो विगीतेभ्यस्तथैव च ॥25॥**

हे पार्वति ! आचरण से पतित साधकों के सम्मुख कामाख्याविद्या की चर्चा भी नहीं करना, और न ही काने, लँगड़े और बदनाम व्यक्तियों को कामाख्याविद्या प्रदान करना ।

**उदासीनजनस्यैव सान्निध्ये न वदेदपि ।**
**दाम्भिकाय न दातव्यमभक्ताय विशेषतः ॥26॥**
**मूर्खाय भावहीनाय दरिद्राय ममाज्ञया ।**

हे देवि ! कामाख्याशक्ति सृष्टिकारिणी हैं । इन्हें अपने रचना-संसार से निःसीम लगाव है । अतः संसार से उदासीन किसी विरागी व्यक्ति के सामने कामाख्या विद्या की चर्चा भी नहीं करनी चाहिये । विशेष रूप से यह विद्या किसी भक्तिहीन अहंकारी साधक को नहीं देनी चाहिये । इसके अलावा किसी मूर्ख, वीरादिभावहीन तथा धन-मन से दरिद्र व्यक्ति को भी कामाख्याविद्या प्रदान नहीं करनी चाहिये । हे गौरि ! इसे मेरा आदेश समझो ।

कामाख्याविद्यायामधिकारिणः

**दद्यात् शान्ताय शुद्धाय कौलिकाय महेश्वरि ! ॥27॥**
**कालीभक्ताय शैवाय वैष्णवाय शिवाज्ञया ।**
**अद्वैतभावयुक्ताय महाकालप्रजापिने ॥28॥**
**सुरा-स्त्री-वन्दकायापि शिवाबलिप्रदाय च ॥29॥**

इति श्रीकामाख्यातन्त्रे श्रीदेवीशिवसंवादे नवमः पटलः समाप्तः ।

समाप्तश्चायं ग्रन्थः ।



हे शिवानि ! महाकाल के मन्त्र का जप करने वाले अद्वैतभाव वाले, सुरा और सुन्दरी का सम्मान करने वाले तथा भगवती भवानी को बलि प्रदान करने वाले साधकों को ही कामाख्याविद्या प्रदान करनी चाहिये ।

श्रीदेवीशिवसंवादरूपकामाख्यातन्त्र की रामचन्द्रपुरीकृत मीराश्री
हिन्दी विवृत्ति का नवम पटल समाप्त ।



## श्रीदेवीशिवसंवादरूपकामाख्यातन्त्रे

## परिशिष्टम्

# कामाख्यास्तोत्रम्

कामेशि ! चामुण्डे ! जयभूताऽपहारिणि ! ।
जय सर्वगते देवि ! कामेश्वरि ! नमोऽस्तु ते ।।
विश्वमूर्ते ! शुभे ! शुद्धे ! विरूपाक्षि ! त्रिलोचने ! ।
भीमरूपे ! शिवे ! विद्ये ! कामेश्वरि ! नमोऽस्तु ते ! ।।
मालाजये ! जम्भे ! भूताक्षि ! क्षुभितेऽक्षये ।
महामाये ! महेशानि ! कामेश्वरि ! नमोऽस्तु ते ।।
भीमाक्षि ! भीषणे ! देवि ! सर्वभूतक्षयंकरि ! ।
कालि ! विकरालि ! च कामेश्वरि ! नमोऽस्तु ते ।।
कालि । करालविक्रान्ते ! कामेश्वरि ! हरप्रिये ! ।
सर्वशास्त्रसारभूते ! कामेश्वरि ! नमोऽस्तु ते ।।
कामरूपप्रदीपे ! च नीलकूटनिवासिनि ! ।
निशुम्भशुम्भमथिनि ! कामेश्वरि ! नमोऽस्तु ते ।।
कामाख्ये ! कामरूपस्थे ! कामेश्वरि ! । हरिप्रिये ! ।
कामनां देहि मे नित्यं कामेश्वरि ! नमोऽस्तु ते ।।
*वपानाढ्यमहावक्त्रे ! तथा त्रिभुवनेश्वरि !
महिषासुरवधे ! देवि ! कामेश्वरि ! नमोऽस्तु ते ।।
छागतुष्टे ! महाभीमे ! कामाख्ये ! सुरवन्दिते ! ।
जय कामप्रदे ! तुष्टे ! कामेश्वरि ! नमोऽस्तु ते ।।
भ्रष्टराज्यो यदा राजा नवम्यां नियतः शुचिः ।
अष्टम्यां च चतुर्दश्यामुपवासी नरोत्तमः ।।
संवत्सरेण लभते राज्यं निष्कण्टकं पुनः ।
य इदं शृणुयाद् भक्त्या तव देवि ! समुद्भवम् ।।
सर्वपापविनिर्मुक्तः परं निर्वाणमृच्छति ।
श्रीकामरूपेश्वरि ! भास्करप्रभे ! प्रकाशिताम्भोजनिभायतानने !
सुरारिरक्षःस्तुतिपातनोत्सुके ! त्रयीमये ! देवनुते ! नमामि ।।

---

* वपानम्-शुक्रम् (Semen) इत्यर्थः ।

